॥ लघुषोडशार्णकलाविलासः ॥

कल्याणं जगतामहं कथमुमे ध्यायामि सच्चिद्वपु-
स्त्रय्यन्तैर्मनसापि ते सह चिरं मृग्यापि यत्नेन च ।
ज्ञातुम् नो वदितुं शक्यमभवद् यस्मात् तथा भक्तितः
श्रीचक्राग्रगशैवमञ्चपरशैवाङ्कस्थितां भावये ॥ १॥

एलासौरभिकुन्तले परमुमे त्वां व्याप्य सर्वं स्थितां
काष्ठादिष्विव तैलवह्निनवनीताम्बुप्रवाहादिकम् ।
श्रीमूर्तिष्वतिसुन्दरासु नवबन्धूकप्रभास्वम्बिके
शक्यं किं नु तथापि ते परशिवे चास्थानमावाहये ॥ २॥

ईशावास्यमिदं त्वया सकलमप्यम्बासने मञ्जुले
त्वामारोहयितुं समस्तभुवनाधारं कथं शक्नुयाम् ।
मत्स्वान्ताब्जमपि त्वदासनवरं भूयाद्यतः सर्वदा
सर्वेषां हृदयारविन्दभवने नित्यं वसस्यम्बिके ॥ ३॥

लक्ष्यालक्ष्यविलक्षणं तव वपुः पादादिहीनं परं
पाद्यैस्तत् परितोषयामि कथमप्यत्यन्तमच्छात्मकम् ।
मत्स्वान्तद्रुतहेमरत्नकलशानीतातिभक्त्यम्बुना
विज्ञानामरसिन्धुजेन रचये प्रक्षालनं त्वत्पदे ॥ ४॥

ह्रींकारद्रुममञ्जरीशविनुतेऽनर्घ्याय हस्ताय ते
सर्वाभीष्टफलप्रदाननिरतायार्घ्यं कथं कल्पये ।
गृह्णीष्वाम्ब मया प्रदत्तमनघे विज्ञानपात्रे स्थितं
त्वद्रूपानुभवाम्बुकल्पितमथाप्यर्घ्यं महासुन्दरि ॥ ५॥

हन्त त्वन्मुखनिर्गतेन सकलं पूतं जगत् सर्वदा
वेदेनाचमनीयमद्य सहसा दातुं कथं शक्नुयाम् ।
तुभ्यं श्रीपरदेवते मयि तथाप्यम्बानुकम्पावशाद्
गृह्णीष्वाचमनं प्रकल्पितमुमे गन्धादिभिर्मिश्रितम् ॥ ६॥

सर्वं सर्वत एव पूर्णविभवे पूर्णेन पूर्णं कथं
व्याप्य त्वत्तनुमास्थितामतितरां शुद्धां जगत्पावनीम् ।
गाङ्गैर्निर्मलवारिभिः प्रभवति प्राणी जगत्यां तथा-
प्यानन्दामृतवारिणाहमभिषिञ्चाभ्यादरादम्बिके ॥ ७॥

कल्पय कल्पकवृक्षसंभवमहत्कौसुम्भवस्त्रद्वयं

नानारत्नविचित्रमम्ब परमप्रीत्या कथं ते मया ।
व्यापिन्यै जगतां तथापि विमलेनाच्छादये त्वां परं
विज्ञानात्मकवाससा परशिवे गृह्णीष्व तत् प्रीतितः ॥ ८॥

हंसस्फाटिककुन्दसुन्दरतरश्रीमूर्तिमार्ये शिवे
कर्पूरागरुकुङ्कुमादिमिलितैर्गन्धैः कथं लेपये ।
श्रुत्युक्तां तव सर्वगन्धतनुगां निर्लेपनां निष्कलां
ब्रह्मात्मैक्यभवानुभूतिविमलज्ञानाख्यगन्धैः परम् ॥ ९॥

लग्नेन्दूज्ज्वलरेखमम्ब मकुटं माणिक्यदीप्त्युज्ज्वलं
कालोन्मीलितचम्पकाम्बुजमहद्बिल्वीदलानां स्रजा ।
संवेष्ट्याहमखण्डनिर्मलपरानन्दाम्बुधौ वा कदा
मज्जे मन्मथवैरिभामिनि वद स्वानन्दवारांनिधे ॥ १०॥

ह्रींकारीं निगमागमान्तविदितां भक्त्या कथं तर्पये
धूपैर्गुग्गुलुसंभवैर्जगदिदं संव्याप्य नित्यं स्थितम् ।
श्रीमूर्त्युद्भववासनाभिरधुना दिव्याभिराराधये
संविद्वह्निसमर्पिताखिलजगत्कालागरोर्धूपकैः ॥ ११॥

सर्वज्ञे सकलेष्टदाननिरते सामादिभिः संस्तुते
तुभ्यं कल्पयितुं प्रदीपमरुणे साज्यं कथं शक्नुयाम् ।
बालार्कायुतकोटिसुन्दरतनो भक्त्या तथाप्यञ्चिते
विज्ञानात्मकदीपदीप्तिभिरहं संतर्पयाम्यम्बिके ॥ १२॥

कल्याण्यम्ब कथं निवेदितुमहं नैवेद्यमार्ये शुभे
तप्ताष्टापदभाजनोज्ज्वलमुमे भक्ष्यादिभिः संयुतम् ।
शक्ष्ये संभृतसर्वलोकजठरायै तुभ्यमत्युज्ज्वलं
विश्वासेन समर्पयामि जगदात्मैक्यान्नमानन्ददम् ॥ १३॥

लक्ष्मीवन्दितपादपद्मयुगले लक्ष्मीधवाद्यर्चिते
कर्पूराज्यलसत्सुवर्णकलशप्रोद्भासि नीराजनम् ।
नानाशोभनगीतनृत्तसहितं दिव्याङ्गनाभिर्धृतं
वीक्ष्याद्याम्ब मुदं प्रयाहि कृपया श्रीकामराजेश्वरि ॥ १४॥

ह्रींह्रीमित्यनुभाव्यतां हृततमःपुञ्जे समस्तार्थदे
त्वत्पादाब्जयुगे भवत्वनुदिनं बिल्वाम्बुजार्चाविधिः ।
ह्रींकारार्णमनुप्रयुक्तमरुणे मत्स्वान्तजैः स्वानुभू-
त्यब्जैः साकमखण्डसौख्यनिलये श्रीचक्रराजेश्वरि ॥ १५॥

ह्रींकारोन्नतरत्नमञ्जुलमहत्सिंहासने भासुरा-
मूढे ब्रह्महरीश्वरादिविरलं श्रीकामराजाङ्ककम् ।
सर्वज्ञादिसमस्तशक्तिनिवहैः संसेवितामम्बिकां
सैवास्मीति विभावनानतिशतैः संतोषयाम्यन्वहम् ॥ १६॥

ये ये संततमन्धकारिगृहिणीस्तोत्रं समस्तार्थदं
ज्ञात्वार्थं हृदि मन्त्रराजविमलश्रीबीजवर्णक्रमात् ।
प्रोक्तं मन्त्रविदः पठन्ति सहसा कालत्रयेऽप्यम्बिका-
सांनिध्ये तदनन्यभावनाधियस्तत्रैक्यतां प्राप्नुयुः ॥ १७॥

॥ इति श्रीलघुषोडशार्णकलाविलासस्तोत्रं संपूर्णम्॥